काञ्चनस्यालङ्करणीभूतस्य स्वेदादिदोषाभावप्रतिपादनपरम् । उच्छिष्टाद्युपहतस्य शुद्ध्यभिधानात् ।

आकराः शुचयः सर्व्वे शकुनिः फलपातने ।
श्वा मृगग्रहणे मेध्यः स्त्रीमुखेषु च वारुणी ॥

आकराः सुराकरव्यतिरिक्ताः । आकराः शुचयः सर्व्वे वर्ज्जयित्वा सुराकरमिति पैठीनसिस्मरणात् । ब्राह्मणभार्य्याया अपि शूद्रायाः पीतमद्याया बुद्धिपूर्व्वकं गन्धरसास्वादनरहितं मुखं रतिसंसर्गे शुद्धमेवेत्यर्थः ।

दधि सर्पिः पयः क्षौद्रं भाण्डे दोषो न विद्यते ।
मार्ज्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः ॥

मार्ज्जारस्य स्पर्शे शुद्धत्वमेवेत्यर्थः । अशुचित्वं कर्म्मकालादन्यत्र तत्र स्नानविधानात् ।

अत्रिः ।

मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्य भवेद्दोषस्त्वत्रेश्च वचनं यथा ॥

अप्सु भोजनानन्तरममृतापिधानमसीति अग्नीकरणार्थं या आपो गृह्यन्ते ताः मधुपर्काद्युच्छिष्टस्य मन्त्रोच्चारविषयम् ।

वृहस्पतिः ।

पादौ शुची ब्राह्मणानामजाश्वस्य मुखं शुचिः ।
गवां पृष्ठानि मेध्यानि सर्व्वगात्राणि योषिताम् ॥

उपहतिरहितब्राह्मणचरणस्पृष्टं वस्तु शुद्धमित्यर्थः । एवञ्च ब्राह्मणव्यतिरिक्तचरणस्पर्शो दोषावह इत्युक्तम्भवति ।

अदुष्टा सन्तता धारा वातोद्धृताश्च रेणवः ।
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ॥

षट्त्रिंशन्मते ।

ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके ।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टस्तु भवेन्नरः ॥

दन्तलग्ने तु विशेषो भोजनप्रकरणेऽभिहितः ।

अत्रिः ।

पत्रैर्मूलफलैः पुष्पैस्तृणकाष्ठमयैस्तथा ।
सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टस्तु भवेद्द्विजः ॥

याज्ञवल्क्यः ।

मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥

मुखजाः विप्रुषः श्लेष्मबिन्दवो मुखान्निर्गता आचमनप्रापका न भवन्ति ।

अत्र विशेषमाह गौतमः ।

न मुख्याः* विप्रुष उच्छिष्टं कुर्व्वन्ति चेदङ्गे निपतन्तीति ।

बृहस्पतिः ।

द्राक्षेक्षुयन्त्राकरकारुहस्ता-
गोदोहनीयन्त्रविनिःसृतानि ।
बालैरथ स्त्रीभिरनुष्ठितानि
प्रत्यक्षदुष्टानि शुचीनि तानि ॥

---

* स्वाध्याया इति पाठान्तरम् ।

यत्र विनिःसृतानि इक्षुरसादीनि बालैः स्त्रीभिश्च कृतानि रथ्याप्रसर्पणादिभिर्निमित्तैर्यत्राचमनप्राप्तिस्तत्राचमनमकृत्वापि, यान्यप्यवस्तुस्पर्शपाकादीनि कृतानि तानि प्रत्यक्षतो दुष्टानि* अशुचिभिः कृतानीति ज्ञातान्यपि शुद्धानीत्यर्थः ।

इह मदनपारिजाते मदनक्षितिपालदानजलरूढे ।
स्तवको हि षष्ठ आसीदामोदाकृष्टपण्डितभ्रमरः ॥

मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमियात् ॥
इयं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥

इति पण्डितपारिजातभट्टारमल्लेत्यादिविरुदराजी-
विराजमानस्य श्रीमदनपालस्य निबन्धे मदन-
पारिजाताभिधे षष्ठः स्तवकः ।

---

* दृष्टानीति क्वचित्पाठः